हेरना अच्छा है पर भाई बन्धुओंके बीचमे धनहीन जीना अच्छा नहीं ॥ १५३ ॥

तोऽस्सत्पुण्योदयादनेन मित्रेणाहं स्नेहानुवृत्त्यानुगृहीतः। अधुना पुण्यपरम्परया भवदाश्रयः स्वर्ग एव मया प्राप्तः।

फिर मेरे पुण्यके उदयसे इस मित्रने परम स्नेहसे मेरा आदर किया और अब ण्यकी रीतिसे तुम्हारा आश्रय मुझे स्वर्गके समान मिल गया.

यतः,—

संसारविषवृक्षस्य द्वे एव रसवत्फले।
काव्यामृतरसास्वादः संगमः सुजनैः सह ॥ १५४ ॥

क्योंकि—ससाररूपी विषवृक्षके दोही रसीले फल हैं अर्थात् एक तो व्यरूपी अमृतके रसका स्वाद और दूसरा सज्जनोंका सग ॥ १५४ ॥

न्थर उवाच—

अर्थाः पादरजोपमा गिरिनदीवेगोपमं यौवन-
मायुष्यं जललोलबिन्दुचपलं फेनोपमं जीवितम्।
धर्मं यो न करोति निन्दितमतिः स्वर्गार्गलोद्घाटनं
पश्चात्तापयुतो जरापरिगतः शोकाग्निना दह्यते ॥ १५५ ॥

मथर बोला–धन तो चरणोंकी धूलिके समान है, यौवन पहाड़की नदीके वेगके समान है, आयु चचल जलकी बिन्दुके समान चपल है और जीवन फेन (झाग)के समान है, इसलिये जो निर्बुद्धि स्वर्गकी आगलको खोलने वाले धर्मको नहीं करता है वह पीछे बुढापेमें पछता कर शोककी अग्निसे जलाया जाता है ॥ १५५ ॥

युष्माभिरतिसंचयः कृतः। तस्यायं दोषः, शृणु,—

तुमने बहुतसा सचय किया था उसका यह दोष है ॥ सुनो,–

उपार्जितानां वित्तानां त्याग एव हि रक्षणम्।
तडागोदरसंस्थानां परीवाह इवाम्भसाम् ॥ १५६ ॥

गभीर सरोवरमें भरे हुए जलके चारों ओर निकलनेके (वारवार जल निकाल देना जैसा सरोवरकी शुद्धिका कारण है, उसीके) समान कमाये हुए धनका सत्पात्रमे दान करनाही रक्षा है ॥ १५६ ॥

अन्यच्च,—

यदधोऽधः क्षितौ वित्तं निचखान मितंपचः।
तदधोनिलयं गन्तुं चक्रे पन्थानमग्रतः ॥ १५७ ॥

और दूसरे—लोभी जिस धनको धरतीमें अधिक नीचे गाड़ता है वह धन पातालमें जानेके लिये पहिलेसेही मार्ग कर लेता है ॥ १५७ ॥

अन्यच्च,—

निजसौख्यं निरुन्धानो यो धनार्जनमिच्छति।
परार्थभारवाहीव क्लेशस्यैव हि भाजनम् ॥ १५८ ॥

और जो मनुष्य अपने सुखको रोक कर धनसचय करनेकी इच्छा करता है

गमन्विष्यमाणो विन्ध्याटवीं गतवान् । ततस्तेन व्यापादितं मृग-
दाय गच्छता घोराकृतिः शूकरो दृष्टः । तेन व्याधेन मृगं भूमौ
धाय शूकरः शरेणाहतः । शूकरेणापि घनघोरगर्जनं कृत्वा स
ाधो मुष्कदेशे हतः संछिन्न द्रुम इव भूमौ निपपात ।

कल्याणकटक वस्तीमें एक भैरव नाम व्याध (बहलिया) रहता था । वह एक
न मृगको ढूढता ढूढता विंध्याचलकी वनीमें गया । फिर मारे हुए मृगको
कर जाते हुए उसने एक भयकर शूकरको देखा । तब उस व्याधने मृगको भूमि
रख कर शूकरको वाणसे मारा । शूकरनेभी भयकर गर्जना करके उस
धके मुष्कदेशमें ऐसी ठक्कर मारी कि, वह कटे हुए पेड़के समान जमीन पर
र पड़ा ।

नः,—

जलमग्निर्विषं शस्त्रं क्षुद्व्याधिः पतनं गिरेः ।
निमित्तं किंचिदासाद्य देही प्राणैर्विमुच्यते ॥ १६५ ॥

क्योंकि—जल, अग्नि, विष, शस्त्र, भूख, रोग और पहाड़से गिरना इनमेंसे
सी न किसी वहानेको पा कर प्राणी प्राणोंसे छूटता है ॥ १६५ ॥

अथ तयोः पादास्फालनेन सर्पोऽपि मृतः । अथानन्तरं दीर्घरावो
ाम जम्बुकः परिभ्रमन्नाहारार्थी तान्मृतान्मृगव्याधसर्पशूकरान-
श्यत् । अचिन्तयच्च—'अहो ! अद्य महद्भोज्यं मे समुपस्थितम् ।

उन दोनोंके पैरोंकी रगडसे एक सर्पभी मर गया । इसके पीछे आहारको
ाहने वाले दीर्घराव नाम गीदडने घूमते २ उन मृग, व्याध, सर्प, और शूकरको
रे पडे हुए देखा और विचारा कि 'आहा ! आज तो मेरे लिये वड़ा भोजन
यार है ॥

थवा,—

अचिन्तितानि दुःखानि यथैवायान्ति देहिनाम् ।
सुखान्यपि तथा मन्ये दैवमत्रातिरिच्यते ॥ १६६ ॥

अथवा—जैसे देहधारियोंको अनायास दु ख मिलते हैं वैसेही सुखभी मिलते
है, परन्तु इसमें प्रारब्ध वलवान् है ऐसा मानता हू ॥ १६६ ॥

तद्भवतु । एषां मांसैर्मासत्रयं मे सुखेन गमिष्यति ।

जो कुछ हो, इसके मासोंसे मेरे तीन महीने सुखसे कटेंगे ।

मासमेकं नरो याति द्वौ मासौ मृगशूकरौ ।
अहिरेकं दिनं याति अद्य भक्ष्यो धनुर्गुणः ॥ १६७ ॥

एक महीनेको मनुष्य ( वहलिया ) होगा, दो महिनेको हरिण और सूकर होंगे
और एक दिनको सर्प होगा, और आज धनुषकी डोरी चावनी चाहिये ॥ १६७ ॥

ततः प्रथमबुभुक्षायामिदं निःस्वादु कोदण्डलग्नं स्नायुबन्धनं
खादामि ।' इत्युक्त्वा तथा कृते सति छिन्ने स्नायुबन्धनं उत्पति-

और दूसरे-शास्त्रकी विधि, उद्योग(पराक्रम)से डरे हुए मनुष्यको कुछ गुण (फायदा) नहीं करती है, जैसे इस संसार में हाथ पर धरा हुआभी दीपक, अन्धेको वस्तु नहीं दिखाता है ॥ १७२ ॥

तदत्र सखे! दशाविशेषे शान्तिः करणीया। एतदप्यतिकष्टं त्वया न मन्तव्यम्।

इसलिये हे मित्र! इस शेष दशामें शान्ति करनी चाहिये। और इसेभी अधिक क्लेश तुमको नहीं मानना चाहिये।

यतः,—

राजा कुलवधूर्विप्रा मन्त्रिणश्च पयोधराः।
स्थानभ्रष्टा न शोभन्ते दन्ताः केशा नखा नराः ॥ १७३ ॥

क्योंकि—राजा, कुलकी वधू, ब्राह्मण, मंत्री, स्तन, दंत, केश, नख और मनुष्य ये स्थानसे अलग हुए शोभा नहीं देते हैं ॥ १७३ ॥

इति विज्ञाय मतिमान्स्वस्थानं न परित्यजेत्। कापुरुषवचनमेतत्।

यह जान कर बुद्धिमानको अपना स्थान नहीं छोड़ना चाहिये। यह कायर पुरुषका वचन है।

यतः,—

स्थानमुत्सृज्य गच्छन्ति सिंहाः सत्पुरुषा गजाः।
तत्रैव निधनं यान्ति काकाः कापुरुषा मृगाः ॥ १७४ ॥

क्योंकि—सिंह, सज्जन पुरुष, और हाथी, ये स्थानको छोड कर जाते हैं और काक, कायर पुरुष, और मृग, ये वहाही नाश होते हैं ॥ १७४ ॥

को वीरस्य मनस्विनः स्वविषयः को वा विदेशस्तथा
यं देशं श्रयते तमेव कुरुते बाहुप्रतापार्जितम्।
यद्दंष्ट्रानखलाङ्गूलप्रहरणः सिंहो वनं गाहते
तस्मिन्नेव हतद्विपेन्द्ररुधिरैस्तृष्णां छिनत्त्यात्मनः ॥ १७५ ॥

वीर और उद्योगी पुरुषोंको देश और विदेश क्या है? अर्थात् जैसा देश वैसाही विदेश। वह तो जिस देशमें रहते हैं उसीको अपने बाहुके प्रतापसे जीत लेते है जैसे सिंह जिस वनमें दांत, नख, पूंछसे प्रहार करता हुआ फिरता है उसी वनमें मारे हुए हाथियोंके रुधिरसे अपनी प्यास बुझाता है ॥ १७५ ॥

अपरं च,—

निपानमिव मण्डूकाः सरः पूर्णमिवाण्डजाः।
सोद्योगं नरमायान्ति विवशाः सर्वसंपदः ॥ १७६ ॥

और जैसे मेंडक कूपके पासके पानीके गढ्ढेमें और पक्षी भरे हुए सरोवरको आवे हैं, वैसेही सब सम्पत्तिया अपने आप उद्योगी पुरुषके पास आती हैं ॥ १७६ ॥

आजीविकाके लिये बहुत उद्योग नहीं करना चाहिये, वह तो विधाताने श्चय कर दी है, क्योंकि प्राणीके गर्भसे निकलतेही माताके स्तनोंसे दूध झलने लगता है ॥ १८२ ॥

पि च सखे!,—

येन शुक्लीकृता हंसाः शुकाश्च हरितीकृताः।
मयूराश्चित्रिता येन स ते वृत्तिं विधास्यति ॥ १८३ ॥

और भी हे मित्र! जिसने हंसोंको सफेद, तोतोंको हरा और मोरोंको विचित्र नाया है वही तेरी आजीविकाको देगा ॥ १८३ ॥

पर च, सतां रहस्यं शृणु, मित्र!

और दूसरे—हे मित्र! सज्जनोंका गुप्त मंत्र सुन।

जनयन्त्यर्जने दुःखं तापयन्ति विपत्तिषु।
मोहयन्ति च संपत्तौ कथमर्थाः सुखावहाः? ॥ १८४ ॥

जो कमानेमें दुःख और आपत्तियोंमें संताप करते हैं, और अधिक बढनेसे दाध कर देते हैं ऐसे धन कैसे सुखदायक हो सकते हैं? ॥ १८४ ॥

पर च,—

धर्मार्थं यस्य वित्तेहा वरं तस्य निरीहता।
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ १८५ ॥

और धर्मके लिये जिसको धनकी इच्छा है, उनको धनकी लालसा न होना अच्छा है, क्योंकि कीचडको (छू कर) धोनेसेभी, उनका दूरसे स्पर्श न करनाही अच्छा है ॥ १८५ ॥

तः,—

यथा ह्यामिषमाकाशे पक्षिभिः श्वापदैर्भुवि।
भक्ष्यते सलिले नक्रैस्तथा सर्वत्र वित्तवान् ॥ १८६ ॥

क्योंकि—जैसे आकाशमें पक्षी, पृथ्वी पर सिंह आदि, और जलमें मगर आदि मांसको खाते हैं, वैसेही सर्वत्र धनवान् (ज्वारी चोर इत्यादिका भोजन) है, अर्थात् ये उसे लूटते ठगते हैं ॥ १८६ ॥

राजतः सलिलादग्नेश्चोरतः स्वजनादपि।
भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव ॥ १८७ ॥

धनवानोंको राजा, जल, अग्नि, चोर, और अपने जनोंसे, हमेशा ऐसा भय रहता है कि जैसा प्राणियोंको मृत्युसे ॥ १८७ ॥

तथा हि,—

जन्मनि क्लेशबहुले किं नु दुःखमतः परम्।
इच्छासंपद्यतो नास्ति यच्चेच्छा न निवर्तते ॥ १८८ ॥

और ( मनुष्यको ) जन्म लेनेमेंही बहुत क्लेश है, इससे अधिक [illegible]
दुःख होगा कि जिसमें इच्छाके अनुसार संपत्ति नहीं है और जिसमें इ[illegible]
दूर होती है ॥ १८८ ॥

अन्यच्च भ्रातः ! शृणु,—

धनं तावदसुलभं लब्धं कृच्छ्रेण रक्ष्यते ।
लब्धनाशो यथा मृत्युस्तस्मादेतन्न चिन्तयेत् ॥ १८९ ॥

और दूसरे—हे भाई ! सुनो—पहिले तो धनका मिलना कठिन, और मि[illegible]
जाय तो फिर उसकी रखवाली कष्टसे होती है । और मिले हुए धनका [illegible]
मृत्युके समान है, इसलिये इस(धनलाभ)की चिन्ता न करनी चाहिये ॥१८[illegible]

तृष्णां चेत् परित्यज्य को दरिद्रः क ईश्वरः ।
तस्याश्चेत्प्रसरो दत्तो दास्यं च शिरसि स्थितम् ॥ १९[illegible]

और इस संसारमें तृष्णाको त्याग देनेसे कौन दरिद्री और कौन धनवा[illegible]
और जो उसको अवकाश दिया सोही सेवकाई सिर पर बैठी है ॥ १९० ॥

अपरं च,—

यद्यदेव हि वाञ्छेत ततो वाञ्छा प्रवर्तते ।
प्राप्त एवार्थतः सोऽर्थो यतो वाञ्छा निवर्तते ॥ १९१ ॥

और जब जिस वस्तुकी इच्छा होती है तब [illegible] आशा [illegible]
और जब वह वस्तु किसी उपायसे मिल जाय तब इच्छा निवृत्त होती है ॥१९[illegible]

किं बहुना पक्षपातेन ? मयैव सहात्र कालो नीयताम् ।

और मेरे अधिक पक्षपातसे क्या है ? मेरेही साथ यहां समय बिताओ,

यतः,—

रः,—

श्लाघ्यः स एको भुवि मानवानां
स उत्तमः सत्पुरुषः स धन्यः।
यस्यार्थिनो वा शरणागता वा
नाशाभिभङ्गाद्विमुखाः प्रयान्ति ॥ १९४ ॥

पृथ्वी पर पुरुषोंमें वही एक प्रशसा पानेके योग्य है, वही उत्तम सज्जन पुरुष और वही धन्य है कि जिसके पाससे याचक अथवा शरणागत लोक निराश कर विमुख नहीं फिर जाते हैं ॥ १९४ ॥

वं ते स्वेच्छाहारविहारं कुर्वाणाः संतुष्टाः सुखं निवसन्ति'।

तब वे इस प्रकार अपने इच्छानुसार खाते-पीते खेलते-कूदते संतोष कर बसे रहने लगे ॥

अथ कदाचिच्चित्राङ्गनामा मृगः केनापि त्रासितस्तत्रागत्य मिलितः। ततः पश्चादायान्तं मृगमवलोक्य भयं संचिन्त्य मन्थरो लं प्रविष्टः, मूषिकश्च विवरं गतः। काकोऽप्युड्डीय वृक्षमारूढः। तो लघुपतनकेन सुदूरं निरूप्य भयहेतुर्न कोऽप्यायातीत्यालोचितम्। पश्चात्तद्वचनादागत्य पुनः सर्वे मिलित्वा तत्रैवोपविष्टाः। न्थरेणोक्तम्—'भद्रम्, मृग! स्वागतम्। स्वेच्छयोदकाद्याहारोनुभूयताम्। अत्रावस्थानेन वनमिदं सनाथीक्रियताम्।' चित्राङ्गो ते—'लुब्धकत्रासितोऽहं भवतां शरणागतः। भवद्भिः सह त्र्यमिच्छामि।' हिरण्यकोऽवदत्—'मित्रत्वं तावदस्माभिः सह वताऽयत्नेन मिलितम्।

फिर एक दिन चित्रांग नाम मृग किसीके डरके मारे उनसे आ कर मिला. सके पीछे मृगको आता हुआ देख भयको सोच मन्थर तो पानीमें घुस गया, हा बिलमें चला गया और काकभी उड कर पेड पर जा बैठा। फिर लघुपतनकने रसे निर्णय करके कि, भयका कोईभी कारण नहीं है यह विचारा। पीछे सके वचनसे आकर सब मिल कर वहाही बैठ गये। मन्थरने कहा—'कुशल हो। मृग! तुम्हारा आना अच्छा हुआ। अपनी इच्छानुसार जल आहार आदि ोग करो अर्थात् खाओ, पीओ और यहा रह कर इस वनको सनाथ करो'। चित्राग बोला—'व्याधके डरसे मैं तुम्हारी शरण आया हू और तुम्हारे साथ मित्रता किया चाहता हू। हिरण्यक बोला—'मित्रता तो हमारे साथ तुम्हारी अनायास हो गई है,

यतः,—

औरसं कृतसंबन्धं तथा वंशक्रमागतम्।
रक्षितं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम् ॥ १९५ ॥

क्योंकि–मित्र चार प्रकारके होते हैं, एक तो औरस अर्थात् जन्मसेही हों जैसे पुत्रादि, और दूसरे विवाहादि सबन्धसे हो गये हों और तीसरे कुल-परम्परा से आए हुए हों, और चौथे वे जो आपत्तियोंसे बचावें ॥ १९५ ॥

और ( मनुष्यको ) जन्म लेनेमेंही बहुत क्लेश है, इससे अधिक और दु ख होगा कि जिसमें इच्छाके अनुसार सपत्ति नहीं है और जिसमें इच्छा दूर होती है ॥ १८८ ॥

अन्यच्च भ्रातः ! शृणु,—

धनं तावदसुलभं लब्धं कृच्छ्रेण रक्ष्यते।
लब्धनाशो यथा मृत्युस्तस्मादेतन्न चिन्तयेत् ॥ १८९

और दूसरे–हे भाई ! सुनो–पहिले तो धनका मिलना कठिन, और मि जाय तो फिर उसकी रखवाली कष्टसे होती है। और मिले हुए धनक मृत्युके समान है, इसलिये इस(धनलाभ)की चिन्ता न करनी चाहिये ॥१

तृष्णां चेह परित्यज्य को दरिद्रः क ईश्वरः।
तस्याश्चेत्प्रसरो दत्तो दास्यं च शिरसि स्थितम् ॥ १९

और इस ससारमें तृष्णाको त्याग देनेसे कौन दरिद्री और कौन धनवान और जो उसको अवकाश दिया सोही सेवकाई शिर पर बैठी है ॥ १९० ॥

अपर च,—

यद्यदेव हि वाञ्छेत ततो वाञ्छा प्रवर्तते।
प्राप्त एवार्थतः सोऽर्थो यतो वाञ्छा निवर्तते ॥ १९१

और जब जिस वस्तुमें इच्छा होती है तब उसके लाभकी आशा होव और जब वह वस्तु किसी उपायसे मिल जाय तब इच्छा निवृत्त होती है ॥१९

किं बहुना पक्षपातेन ? मयैव सहात्र कालो नीयताम्।

और मेरे अधिक पक्षपातसे क्या है ? मेरेही साथ यहां समय बिताओ,

यतः,—

आमरणान्ताः प्रणयाः कोपास्तत्क्षणभङ्गुराः।
परित्यागाश्च निःसङ्गा भवन्ति हि महात्मनाम्' ॥ १९

क्योंकि—महात्माओंका स्नेह मरने तक, क्रोध क्षणमात्र तक और परि केवल सगरहित होता है अर्थात् कुछ बुराई नहीं करते हैं ॥ १९२ ॥

इति श्रुत्वा लघुपतनको ब्रूते–'धन्योऽसि मन्थर ! सर्वथा श्ला गुणोऽसि।

यह सुन कर लघुपतनक बोला—'हे मन्थर ! तुम धन्य हो, और प्रशसनीय गुणवाले हो !

यतः,—

सन्त एव सतां नित्यमापदुद्धरणक्षमाः।
गजानां पङ्कमग्नानां गजा एव धुरंधराः ॥ १९३ ॥

क्योंकि—सज्जनही सज्जनोंकी आपत्तिको सर्वदा दूर करनेके योग्य होते हैं। कीचड़में फँसे हुए हाथियोंके निकालनेके लिये हाथीही समर्थ होते हैं ॥ १९

:,—

श्लाघ्यः स एको भुवि मानवानां
स उत्तमः सत्पुरुषः स धन्यः ।
यस्यार्थिनो वा शरणागता वा
नाशाभिभङ्गाद्विमुखाः प्रयान्ति ॥ १९४ ॥

पृथ्वी पर पुरुषोंमें वही एक प्रशंसा पानेके योग्य है, वही उत्तम सज्जन पुरुष और वही धन्य है कि जिसके पाससे याचक अथवा शरणागत लोक निराश कर विमुख नहीं फिर जाते हैं ॥ १९४ ॥

ड्वं ते स्वेच्छाहारविहारं कुर्वाणाः संतुष्टाः सुखं निवसन्ति' ।

तब वे इस प्रकार अपने इच्छानुसार खाते-पीते खेलते-कूदते संतोष कर बसे रहने लगे ॥

अथ कदाचिच्चित्राङ्गनामा मृगः केनापि त्रासितस्तत्रागत्य मि-तः । ततः पश्चादायान्तं मृगमवलोक्य भयं संचिन्त्य मन्थरो लं प्रविष्टः, मूषिकश्च विवरं गतः । काकोऽप्युड्डीय वृक्षमारूढः । तो लघुपतनकेन सुदूरं निरूप्य भयहेतुर्न कोऽप्यायातीत्यालोचि-म् । पश्चात्तद्वचनादागत्य पुनः सर्वे मिलित्वा तत्रैवोपविष्टाः । न्थरेणोक्तम्—'भद्रम्, मृग ! स्वागतम् । स्वेच्छयोदकाद्याहारो-नुभूयताम् । अत्रावस्थानेन वनमिदं सनाथीक्रियताम् ।' चित्राङ्गो ते—'लुब्धकत्रासितोऽहं भवतां शरणागतः । भवद्भिः सह ख्यमिच्छामि ।' हिरण्यकोऽवदत्—'मित्रत्वं तावदस्माभिः सह वताऽयत्नेन मिलितम् ।

' फिर एक दिन चित्रांग नाम मृग किसीके डरके मारे उनसे आ कर मिला. उके पीछे मृगको आता हुआ देख भयको सोच मन्थर तो पानीमें घुस गया, हा बिलेमें चला गया और काकभी उड कर पेड़ पर जा बैठा । फिर लघुपतनकने रसे निर्णय करके कि, भयका कोईभी कारण नहीं है यह विचारा । पीछे सके वचनसे आकर सब मिल कर वहाही बैठ गये । मन्थरने कहा–'कुशल हो । मृग ! तुम्हारा आना अच्छा हुआ । अपनी इच्छानुसार जल आहार आदि ोग करो अर्थात् खाओ, पीओ और यहा रह कर इस वनको सनाथ करो' । त्रांग बोला–'व्याधके डरसे मैं तुम्हारी सरण आया हू और तुम्हारे साथ ित्रता किया चाहता हूं । हिरण्यक बोला–'मित्रता तो हमारे साथ तुम्हारी नायास हो गई है,

तः,—

औरसं कृतसंबन्धं तथा वंशक्रमागतम् ।
रक्षितं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम् ॥ १९५ ॥

क्योंकि–मित्र चार प्रकारके होवे हैं, एक तो औरस अर्थात् जन्मसेही हों से पुत्रादि, और दूसरे विवाहादि संबन्धसे हो गये हों और तीसरे कुल-पर-परा से आए हुए हों, और चौथे वे जो आपत्तियोंसे बचावें ॥ १९५ ॥

तदत्रभवता स्वगृहनिर्विशेषं स्थीयताम्' । तच्छ्रुत्वा मृगः सानन्दो भूत्वा स्वेच्छाहारं कृत्वा पानीयं पीत्वा जलासन्नतरुच्छायाया मुपविष्टः । अथ मन्थरेणोक्तम्—'सखे मृग ! एतस्मिन्निर्जने वने केन त्रासितोऽसि ? कदाचित्किं व्याधाः संचरन्ति ?' मृगेणोक्तम्—'अस्ति कलिङ्गविषये रुक्माङ्गदो नाम नरपतिः । स च दिग्विजयव्यापारक्रमेणागत्य चन्द्रभागानदीतीरे समावासित कटको वर्तते । प्रातश्च तेनात्रागत्य कर्पूरसर.समीपे भवितव्य मिति व्याधानां मुखात्किंवदन्ती श्रूयते । तदत्रापि प्रातरवस्थान भयहेतुकमित्यालोच्य यथावसरकार्यमारभ्यताम्' । तच्छ्रुत्वा कूर्मः सभयमाह—'जलाशयान्तर गच्छामि' । काकमृगावप्युक्तवन्तौ—'एवमस्तु' । ततो हिरण्यको विहस्याह—'जलाशयान्तरे प्राप्ते मन्थरस्य कुशलम् । स्थले गच्छतः कः प्रतीकार. ?

इसलिये यहा तुम अपने घरसेभी अधिक आनन्दसे रहो । यह सुन कर मृग प्रसन्न हो अपनी इच्छानुसार भोजन करके तथा जल पी कर जलके पास वृक्षकी छायामे बैठ गया ॥ मन्थरने कहा कि–'हे मित्र मृग ! इस निर्जन वनमें तुम्हें किसने डराया है ? क्या कभी कभी व्याध आ फिरते हैं ?' । मृगने कहा–'कलिङ्ग देशमें रुक्मागद नाम राजा है । और वह दिग्विजय करनेके लिये आ कर चन्द्रभागा नदीके तीर पर अपनी सेनाको टिका कर ठहरा है । और प्रात काल वह यहा आ कर कर्पूरसरोवरके पास ठहरेगा यह उडती हुई बात बहेलियोंके मुखसे सुनी जाती है । इसलिये प्रात काल यहा रहनाभी भयका कारण है। यह सोच कर समयके अनुसार काम करना चाहिये' । यह सुन कर कछुआ डर कर बोला–'मैं तो और सरोवरको जाता हू' । काग और मृगनेभी कहा–'ऐसाही होय अर्थात् चलो' । फिर हिरण्यक हँस कर बोला–'दूसरे सरोवरमें पहुचने पर मथर जीता बचेगा । परतु इसके पटपड़मे चलनेका कौनसा उपाय है ?

यतः,—

अम्भांसि जलजन्तूनां दुर्गं दुर्गनिवासिनाम् ।
स्वभूमिः श्वापदादीनां राज्ञां मन्त्री परं बलम् ॥ १९६ ॥

क्योंकि–जलके जन्तुओंको जलका, गढमे रहने वालोंको गढका, सिंहादि वनचरोंको अपनी भूमिका, और राजाओंको मन्त्रीका, परम बल होता है ॥१९६॥

सखे लघुपतनक ! अनेनोपदेशेन तथा भवितव्यम्,

हे सखे लघुपतनक ! इस उपदेशसे वह गति होगी,

स्वयं वीक्ष्य यथा वध्वाः पीडितं कुचकुड्मलम् ।
वणिक्पुत्रोऽभवद्दु.खी त्वं तथैव भविष्यसि' ॥ १९७ ॥

जैसे कि एक बनियेका पुत्र आपही अपनी स्त्रीके कमलकी कलीके समान कुच (दूसरेको) मसक्ते हुए देख कर दुखी हुआ, वैसेही तुम भी होगे ॥१९७॥

ऊचुः।—'कथमेतत्?' हिरण्यकः कथयति—
वे दोनो पूछने लगे–'यह कथा कैसी है?' हिरण्यक कहने लगा—

## ॥ कथा ७ ॥

अस्ति कान्यकुब्जविषये वीरसेनो नाम राजा। तेन वीरपुर-
ाम्नि नगरे तुङ्गबलो नाम राजपुत्रो भोगपतिः कृतः। स च
हाधनस्तरुण एकदा स्वनगरे भ्राम्यन्नतिप्रौढयौवनां लावण्य-
तीं नाम वणिक्पुत्रवधूमालोकयामास। ततः स्वहर्म्यं गत्वा
मराकुलमतिस्तस्याः कृते दूतीं प्रेषितवान्।

कान्यकुब्ज देशमें एक वीरसेन नाम राजा था। उसने वीरपुर नाम नगरमें
ुंगवल नाम राजपुत्रको युवराज कर दिया था। उस बड़े धनवान् तरुणने एक
दन नगरमें फिरते हुए एक नव-यौवनवती लावण्यवती नाम वनियेकी पुत्र-
धूको देखा। फिर अपने राजभवनमें जा कर कामान्ध हो उसके लिये दूती
ेजी.

यतः,—

सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेन्द्रियाणां
लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव।
भ्रूचापाकृष्टमुक्ताः श्रवणपथगता नीलपक्ष्माण एते
यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतन्ति॥

क्योंकि–पुरुष तभी तक अच्छे मार्गमें रहता है, तभी तक इन्द्रियोंको वशमे
रखता है, तभी तक लज्जा रखता है, और तभी तक नम्रताका सहारा करता है,
कि, जब तक सुन्दर सुन्दर स्त्रियोंको भौंहरूपी धनुषसे खींच कर छोड़े गये और
कानके मार्ग तक खींचे गये, धैर्यको तोडने वाले ये नीले पलकवाले नेत्ररूपी बाण
हृदयमें नहीं लगते हैं॥ १९८॥

सापि लावण्यवती तदवलोकनक्षणात्प्रभृति स्मरशरप्रहारजर्ज-
रितहृदया तदेकचित्ताभवत्।

उस लीलावतीनेभी जिस समयसे उसे देखा था उसी क्षणसे कामदेवके
बाणोंके प्रहारसे जिसका हृदय छिद गया था ऐसी वह उसीके ध्यानमें लौलीन
हो गई।

तथा ह्युक्तम्,—

असत्यं साहसं माया मात्सर्यं चातिलुब्धता।
निर्गुणत्वमशौचत्वं स्त्रीणां दोषाः स्वभावजाः॥ १९९॥

जैसा कहा भी है—झूठ, साहस, छल, ईर्षा, अत्यन्त लोभ, निर्गुणता और
अशुद्धता, ये दोष स्त्रियोंके स्वभावहीसे होते हैं॥ १९९॥

---

१ यह श्लोक दो पक्षमें लगता है अर्थात् धनुष और स्त्रीपक्षमें। धनुष और
भौंहकी, नीलपलक और नीले पखकी, और नेत्र और बाणकी समता है.

अथ दूतीवचनं श्रुत्वा लावण्यवत्युवाच—'अहं पतिव्रता कथ मेतस्मिन्नधर्मे पतिलङ्घने प्रवर्ते ?

फिर दूतीकी बात सुन कर लावण्यवती बोली-'मैं पतिव्रता हू, पतिके अन करने वाले इस अधर्ममें कैसे प्रवृत्त होऊ ?

यतः,—

सा भार्या या गृहे दक्षा सा भार्या या प्रजावती ।
सा भार्या या पतिप्राणा सा भार्या या पतिव्रता ॥ २०० ॥

क्योंकि-जो गृहस्थाश्रमके कार्यमें कुशल, पुत्रवती, पतिको प्राणोंके सम समझने वाली, तथा पतिव्रता है वह 'भार्या' कहाती है ॥ २०० ॥

न सा भार्येति वक्तव्या यस्या भर्ता न तुष्यति ।
तुष्टे भर्तरि नारीणां संतुष्टाः सर्वदेवताः ॥ २०१ ॥

जिससे पति सतुष्ट न हो वह भार्या नहीं कहाती है, क्योंकि स्त्रियोंके प सतुष्ट होनेसे सब देवता सतुष्ट होते हैं ॥ २०१ ॥

ततो यद्यदादिशति मे प्राणेश्वरस्तदेवाहमविचारितं करोमि। दूत्योक्तम्-'सत्यतममेतत् ।' लावण्यवत्युवाच-'ध्रुवं सत्यमेतद्' ततो दूतिकया गत्वा तत्तत्सर्वं तुङ्गबलस्याग्रे निवेदितम् । तच्छ्रुत्व तुङ्गबलोऽब्रवीत्—'विषमेषुणा व्रणितहृदयस्तां विना कथमा जीविष्यामि ?' कुट्टन्याह—'स्वामिनानीय समर्पयितव्ये'ति। स प्राह—'कथमेतच्छक्यम् ?' कुट्टन्याह—'उपायः क्रियताम् ।

इसलिये जो जो मेरा पति मुझे आज्ञा देता है उसे बिना विचारे करती दूती बोली-'यह बात बहुत सच्ची है ॥' लावण्यवतीने कहा-'वास्तवमें सच्ची है फिर दूतीने जा कर यह सब समाचार तुगबलके आगे जताया ॥ वह सुन तुगबलने कहा-'तीक्ष्ण बाणसे टुकडे टुकडे हुए हृदय वाला मैं उसके बिना जिऊंगा ?' दूतीने कहा-'उसका पति लाकर सौंप देगा.' उसने कहा-'यह हो सकता है ?' कुटनी बोली-'उपाय कीजिये,

तथा चोक्तम्,—

उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः ।
शृगालेन हतो हस्ती गच्छता पङ्कवर्त्मना' ॥ २०२ ॥

जैसा कहा भी है—जो बात उपायसे हो सकती है वह पराक्रमसे नहीं सकती है, जैसे कीचडके मार्गसे जाते हुए हाथीको सियारने मार डाला' ॥२०

राजपुत्रः पृच्छति—'कथमेतत् ?' सा कथयति—

राजपुत्र पूछने लगा-'यह कथा कैसी है ?' वह कहने लगी—

## ॥ कथा ८ ॥

अस्ति ब्रह्मारण्ये कर्पूरतिलको नाम हस्ती । तमवलोक्य सर्वे शृगालाश्चिन्तयन्ति स्म—'यद्ययं केनाप्युपायेन म्रियते तदास्माकमेतद्देहेन मासचतुष्टयस्य भोजनं भविष्यति ।' तत्रैके वृद्धशृगालेन प्रतिज्ञातम्—'मया बुद्धिप्रभावादस्य मरणं साध

ाव्यम्।' अनन्तरं स वञ्चकः कर्पूरतिलकसमीपं गत्वा ाङ्गपातं प्रणम्योवाच—'देव! दृष्टिप्रसादं कुरु'। हस्ती —'कस्त्वम्? कुतः समायातः?' सोऽवदत्—'जम्बुकोऽहम्। ्वेनवासिभिः पशुभिर्मिलित्वा भवत्सकाशं प्रस्थापितः यद्विना ावस्थातुं न युक्तम्, तदात्राटवीराज्येऽभिषेक्तुं भवान् सर्व- मिगुणोपेतो निरूपितः।

ब्रह्मवनमें कर्पूरतिलक नाम हाथी था। उसको देख कर सब गीदड़ोंने सोचा ् यह किसी उपायसे मारा जाय तो उसकी देहसे हमारा चार महीनेका भोजन ।' उनमेंसे एक बूढ़े गीदड़ने इस बातकी प्रतिज्ञा करी–'मैं इसे बुद्धिके बलसे ाा। फिर उस धूर्तने कर्पूरतिलक हाथीके पास जा कर साष्टांग प्रणाम करके –'महाराज! कृपादृष्टि कीजिये।' हाथी बोला—'तू कौन है? कहासे ा है?' वह बोला—'मैं गीदड़ हूं,' सब वनके रहने वाले पशुओंने पचायत े आपके पास भेजा है, कि विना राजाके यहा रहना योग्य नहीं है लिये इस वनके राज्य पर राजाके सब गुणोंसे शोभायमान आपको राजतिलक नेका निश्चय किया है.

ाः,—

यः कुलाभिजनाचारैरतिशुद्धः प्रतापवान्।
धार्मिको नीतिकुशलः स स्वामी युज्यते भुवि ॥ २०३ ॥

क्योंकि—जो कुलाचार और लोकाचारमें निपुण होय तथा प्रतापी, धर्मशील, र नीतिमें कुशल हो वह पृथ्वी पर राजा होनेके योग्य होता है ॥ २०३ ॥

पर च पश्य,—

राजानं प्रथमं विन्देत्ततो भार्यां ततो धनम्।
राजन्यसति लोकेऽस्मिन्कुतो भार्या कुतो धनम्? ॥२०४॥

और देखो—पहिले राजाको ढूढना चाहिये, फिर स्त्री और उसके बाद धनको ढ, क्योंकि राजाके नहीं होनेसे इस दुनियामें कहासे स्त्री और कहासे धन ल सकता है? ॥ २०४ ॥

ान्यच्च,—

पर्जन्य इव भूतानामाधारः पृथिवीपतिः।
विकलेऽपि हि पर्जन्ये जीव्यते न तु भूपतौ ॥ २०५ ॥

और दूसरे–राजा, प्राणियोंको मेघके समान जीवनका सहारा है और मेघके ीं बरसनेसे तो लोक जीता रहता है, परन्तु राजाके न होनेसे जी नहीं कता है ॥ २०५ ॥

नियतविषयवर्ती प्रायशो दण्डयोगा-
ज्जगति परवशेऽस्मिन्दुर्लभः साधुवृत्तः।
कृशमपि विकलं वा व्याधितं वाऽधनं वा
पतिमपि कुलनारी दण्डभीत्याभ्युपैति ॥ २०६ ॥

इस परवश ( अर्थात् राजाके आधीन ) इस ससारमें बहुधा दडके भ
लोग अपने नियत कार्योंमें लगे रहते हैं और नहीं तो अच्छे आचरणमें न
ध्योंका रहना कठिन है। क्योंकि दडकेही भयसे कुलकी स्त्री दुबले, विक
( अर्थात् लगडे लूले ) रोगी या निर्धनभी पतिको स्वीकार करती है ॥ २०,

तद्यथा लग्नवेला न विचलति तथा कृत्वा सत्वरमागम्यतां देवेन
इत्युक्त्वोत्थाय चलितः। ततोऽसौ राज्यलोभाकृष्टः कर्पूरतिल
शृगालवर्त्मना धावन्महापङ्के निमग्नः। ततस्तेन हस्तिनोक्तम्-
'सखे शृगाल! किमधुना विधेयम्? पङ्के निपतितोऽहं म्रिये
परावृत्य पश्य'। शृगालेन विहस्योक्तम्-'देव! मम पुच्छकावलम्
कृत्वोत्तिष्ठ। यन्मद्विधस्य वचसि त्वया प्रत्ययः कृतस्तदनुभूय
मशरणं दुःखम्।

इस लिये, जिसमें लग्नकी घडी न टल जाय शीघ्र आप पधारिये। यह क
उठ कर चला फिर यह कर्पूरतिलक राज्यके लोभमें फँस कर शृगालके पीछे प
दौडता हुआ गाढी कीचडमें फँस गया। फिर उस हाथीने कहा-'मित्र गीदड़
अब क्या करना चाहिये? कीचड़में गिर कर मैं मरता हू। लौट कर देख।' गीदड़
हस कर कहा-'महाराज! मेरी पूंछका सहारा पकड़ कर उठो, जैसा मुझ सरीख
बात पर विश्वास किया तैसा शरणरहित दु ख भुगतो।

तथा चोक्तम्,—

यदाऽसत्सङ्गरहितो भविष्यसि भविष्यसि।
तदाऽसज्जनगोष्ठीषु पतिष्यसि पतिष्यसि' ॥ २०७ ॥

जैसा कहा है—जब बुरे सगसे बचोगे तब जानो जिओगे, और जो दुर्ज
सगतमें पडोगे तो मरोगे ॥ २०७ ॥

ततो महापङ्के निमग्नो हस्ती शृगालैर्भक्षितः। अतोऽहं ब्रवीमि-
"उपायेन हि यच्छक्यम्" इत्यादि। ततः कुट्टिन्युपदेशेन तं चारु
दत्तनामानं वणिक्पुत्रं स राजपुत्रः सेवकं चकार। ततोऽसौ तेन
सर्वविश्वासकार्येषु नियोजितः।

फिर बडी कीचडमें फँसे हुए हाथीको गीदडोंने खा लिया। इसलिये मैं क
ता हू-कि "उपायसे जो हो सकता है" इत्यादि फिर उस राजपुत्रने कुटनी
उपदेशसे चारुदत्त नाम बनियेके पुत्रको सेवक बनाया। पीछे इसको उसने स
विश्वासके कार्योंमें नियुक्त कर दिया.

एकदा तेन राजपुत्रेण स्नातानुलिप्तेन कनकरत्नालंकार
धारिणा प्रोक्तम्-'अद्यारभ्य मासमेकं गौरीव्रतं कर्तव्यम्। तद्
प्रतिरात्रमेकां कुलीनां युवतीमानीय समर्पय। सा मया यथो
चितेन विधिना पूजयितव्या।' ततः स चारुदत्तस्तथाविध
नवयुवतीमानीय समर्पयति। पश्चात्प्रच्छन्नः सन्किमयं करो
तीति निरूपयति। स च तुङ्गबलस्तां युवतीमस्पृशन्नेव दूर

त्नालंकारगन्धचन्दनैः संपूज्य रक्षकं दत्त्वा प्रस्थापयति ।
थ वणिक्पुत्रेण तद्दृष्ट्वोपजातविश्वासेन लोभाकृष्टमनसा स्ववधूः
वण्यवती समानीय समर्पिता । स च तुङ्गवलस्तां हृदयप्रियां
वण्यवतीं विज्ञाय ससंभ्रममुत्थाय निर्भरमालिङ्ग्य निमीलि-
क्षः पर्यङ्के तया सह विललास । तदालोक्य वणिक्पुत्रश्चित्र-
खित इवेतिकर्तव्यतामूढः परं विषादमुपगतः । अतोऽहं
ीमि—"स्वयं वीक्ष्य" इत्यादि । तथा त्वयापि भवितव्यम्'
ते । तद्धितवचनमवधीर्य महता भयेन विमुग्ध इव तं
लाशयमुत्सृज्य मन्थरश्चलितः । तेऽपि हिरण्यकादयः
हादनिष्टं शङ्कमाना मन्थरमनुगच्छन्ति । ततः स्थले गच्छन्के-
पि व्याधेन काननं पर्यटता मन्थरः प्राप्तः । प्राप्य तं गृहीत्वो-
ाप्य धनुपि बद्ध्वा भ्रमन्क्लेशात्क्षुत्पिपासाकुलः स्वगृहाभिमुखं
लितः । अथ मृगवायसमूषकाः परं विषादं गच्छन्तस्तमनुजग्मुः ।

एक दिन कुट्टनीके उपदेशसे उस राजपुत्रने न्हा धो कर और देहमे चन्दन
ादि सुगन्ध द्रव्य लगा कर और सुवर्णके रत्नजटित आभूषणोंको पहिर कर
हा-'चारुदत्त! आजसे लेकर एक मास तक मुझे पार्वतीजीका व्रत करना है ।
पलिये आजसे यहां नित्य रातको एक कुलीन जवान स्त्री मुझे ला दिया कर,
उसकी यथोचित रीतिसे पूजा करूंगा' ॥ फिर वह चारुदत्त वैसीही नव-
वान स्त्री ला कर दिया करता था । पीछे आप छुप कर देखता रहता था, कि
ह क्या करता है और वह तुगवल उस जवान स्त्रीको विनाही छुए दूरसे वस्त्र,
भूषण, गन्ध चन्दनादिसे पूजा करके और रखवाला साथ दे कर विदा कर
या करता था । फिर उस वनियेके पुत्रने यह देख विश्वाससे और चित्तमें
भिके मारे अपनी स्त्री लावण्यवती ला कर दे दिया । और उस तुगवलने उसे
ाणप्यारी लावण्यवती जान कर शीघ्रतासे उठ गाढा आलिंगन कर आनन्दसे
ऑखो कुछ बन्द-सा कर पलग पर उसके साथ विलास किया । यह देख कर
नियेका वेटा चित्र लिखेके समान हो कर इस कार्यमें मूर्ख बन अधिक दु खी
आ । इसलिये मैं कहता हू कि, "आप देख कर" इत्यादि । और तुम भी वैसेही
खी होगे ।' उसके हितकारक वचनको न मान कर वडे भयसे मूर्खकी भाति वह
न्थर उस सरोवरको छोड कर चला । वे हिरण्यक आदिभी स्नेहसे विपत्तिकी
ाका करते हुए मन्थरके पीछे पीछे चले । फिर पटपडमें जाते हुए मन्थरको,
ननमें घूमते हुए किसी व्याधसे पाया । वह उसे पा कर और उठा कर धनुपमें
ाध घूमता हुआ क्लेशसे उत्पन्न हुई क्षुधा और प्यासले व्याकुल, अपने घरकी
ओर चला । पीछे मृग, काक और चूहा, ये वडा विषाद करते हुए उसके पीछे
ीछे चले.

ततो हिरण्यको विलपति—

'एकस्य दुःखस्य न यावदन्तं
गच्छाम्यहं पारमिवार्णवस्य ।
तावद्द्वितीयं समुपस्थितं मे
छिद्रेष्वनर्था बहुलीभवन्ति ॥ २०८ ॥

फिर हिरण्यक विलाप करने लगा—'समुद्रके पारके समान निःसीम दुःखके पार जब तक मैं नहीं जाता हूं तब तक मेरे लिये दूसरा दुःख कर उपस्थित हो जाता है, क्योंकि अनर्थ (आपत्ति)के साथ बहुत-से अनर्थ पडते हैं ॥ २०८ ॥

स्वाभाविकं तु यन्मित्रं भाग्येनैवाभिजायते ।
तदकृत्रिमसौहार्दमापत्स्वपि न मुञ्चति ॥ २०९ ॥

स्वभावसे स्नेह करने वाला (अकृत्रिम) मित्र तो प्रारब्धसेही मिलता है जो सच्ची मित्रताको आपत्तियोंमेंभी नहीं छोड़ता है ॥ २०९ ॥

न मातरि न दारेषु न सोदर्ये न चात्मजे ।
विश्वासस्तादृशः पुंसां यादृङ्मित्रे स्वभावजे' ॥ २१० ॥

न मातामें, न स्त्रीमें, न सगे भाईमें, और न पुत्रमें ऐसा विश्वास होता है जैसा स्वाभाविक मित्रमें होता है ॥ २१० ॥

इति मुहुर्विचिन्त्य 'अहो दुर्दैवम् !

ये वारवार सोच कर (बोला)–'अहो दुर्भाग्य है !

यतः,—

स्वकर्मसंतानविचेष्टितानि
कालान्तरावर्तिशुभाशुभानि ।
इहैव दृष्टानि मयैव तानि
जन्मान्तराणीव दशान्तराणि ॥ २११ ॥

क्योंकि—इस संसारमें अपने पापपुण्योंसे किये गये और समयके उलट पलटसे बदलने वाले सुखदुःख, पूर्वजन्मके किये हुये पापपुण्यके फलके समान मैंने यहांही देख लिये ॥ २११ ॥

अथवेत्थमेवैतत्,—

कायः संनिहितापायः संपदः पदमापदाम् ।
समागमाः सापगमाः सर्वमुत्पादि भङ्गुरम् ॥ २१२ ॥

अथवा यह ऐसेही है–शरीरके पासही उसका नाश है और संपत्तियां आपत्तियोंका मुख्य स्थान हैं और संयोगके साथ वियोग है, अर्थात् अस्थिर है और उत्पन्न हुआ सब नाश होने वाला है ॥ २१२ ॥

पुनर्विमृश्याह—

'शोकारातिभयत्राणं प्रीतिविश्रम्भभाजनम् ।
केन रत्नमिदं सृष्टं 'मित्र'मित्यक्षरद्वयम् ॥ २१३ ॥

और विचार कर बोला–'शोक, और शत्रुके भयसे बचाने वाला, तथा प्रीति और विश्वासका पात्र, यह दो अक्षरका 'मित्र'रूपी रत्न किसने रचा है? ॥२१३॥

च,—

मित्रं प्रीतिरसायनं नयनयोरानन्दनं चेतसः
पात्रं यत्सुखदुःखयोः सह भवेन्मित्रेण तद्दुर्लभम्।
ये चान्ये सुहृदः समृद्धिसमये द्रव्याभिलापाकुला-
स्ते सर्वत्र मिलन्ति तत्त्वनिकषग्रावा तु तेषां विपत्'॥२१४॥

और अजनके समान नेत्रोंको प्रसन्न करने वाला, चित्तको आनन्द देने वाला र मित्रके साथ सुखदु खमें साथ देने वाला, अर्थात् दु खमें दु खी, सुखमें सुखी ऐसा मित्र होना दुर्लभ है, और सपत्ति(चलती)के समयमे धन हरने वाले न हर जगह मिलते हैं, परन्तु विपत्कालही उनके परखनेकी कसौटी है'॥२१४॥

इति वहु विलप्य हिरण्यकश्चित्राङ्गलघुपतनकावाह–'यावदयं ाधो वनान्न निःसरति तावन्मन्थरं मोचयितुं यत्नः क्रियताम्।' वूचतुः–'सत्वरं कार्यमुच्यताम्।' हिरण्यको ब्रूते–'चित्राङ्गो लसमीपं गत्वा मृतमिवात्मानं दर्शयतु। काकश्च तस्योपरि थत्वा चञ्च्वा किमपि विलिखतु। नूनमनेन लुब्धकेन तत्र च्छपं परित्यज्य मृगमांसार्थिना सत्वरं गन्तव्यम्। ततोऽहं न्थरस्य वन्धनं छेत्स्यामि। संनिहिते लुब्धके भवद्भ्यां लायितव्यम्।' चित्राङ्गलघुपतनकाभ्यां शीघ्रं गत्वा तथानुष्ठिते ाति स व्याधः श्रान्तः पानीयं पीत्वा तरोरधस्तादुपविष्टस्तथा- धं मृगमपश्यत्। ततः कर्तरिकामादाय प्रहृष्टमना मृगान्तिकं ालितः। तत्रान्तरे हिरण्यकेनागत्य मन्थरस्य वन्धनं छिन्नम्। । कूर्मः सत्वर जलाशयं प्रविवेश। स मृग आसन्नं तं व्याधं ोलोक्योत्थाय पलायितः। प्रत्यावृत्य लुब्धको यावत्तरुतलमा- ाति तावत्कूर्ममपश्यन्नचिन्तयत्—'उचितमेवैतन्ममासमीक्ष्य- ारिण.।

इस प्रकार वहुत-सा विलाप करके हिरण्यकने चित्राग और लघुपतनकसे हा–'जव तक यह व्याध वनसे न निकल जाय तव तक मन्थरको छुड़ानेका यत्न रो।' वे दोनों वोले–'शीघ्र कार्यको कहिये।' हिरण्यक वोला–'चित्राग जलके ास जा कर मरेके समान अपना शरीर दिखावे और काक उस पर वैठके चोंचसे ुछ कुछ खोदें, यह व्याध कछुएको अवश्य वहा छोड़ कर मृगके मासका लोभसे ीघ्र जायगा। फिर मैं मन्थरके वधन काट डालूंगा। और सव व्याध ुम्हारे पास आवे तव भाग जाना।' जव चित्राग और लघुपतनकने शीघ्र जा कर ऐसाही किया तव उस व्याधने पानी पी कर एक पेड़के नीचे वैठ कर मृगको उस प्रकार देखा। फिर छुरी लेकर आनदित होकर मृगके पास गया। इतनेहीमें हिरण्यकने आ कर कछुएका वंधन काट डाला। तव वह कछुआ शीघ्र सरोवरमें घुस गया। वह मृग उस व्याधको पास देख उठ कर भाग गया।

जब व्याध लौट कर पेड़के नीचे आया, तब कछुएको न देख कर चिंता लगा—'मेरे समान विना विचार करने वालेके लिये यही उचित था ।

यतः,—

यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते ।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव हि' ॥ २१५ ॥

क्योंकि—जो निश्चितको छोड़ अनिश्चित पदार्थका आसरा करता है निश्चित पदार्थ नष्ट हो जाते हैं, और अनिश्चितभी जाता रहता है' ॥ २

ततोऽसौ स्वकर्मवशान्निराशः कटकं प्रविष्टः । मन्थरादयः त्यक्तापदः स्वस्थानं गत्वा तथा सुखमास्थिताः ॥

फिर वह अपने प्रारब्धको दोष लगाता हुआ निराश होकर अपने घर मंथर आदिभी सब आपत्तिसे निकल अपने अपने स्थान पर जा कर सुखसे लगे ।

अथ राजपुत्रैः सानन्दमुक्तम्—'सर्वं श्रुतवन्तः सुखिनो वय सिद्धं नः समीहितम् ।' विष्णुशर्मोवाच—'एतावता भवताम लषितं संपन्नम् ।

पीछे राजपुत्र प्रसन्न होकर कहने लगे—'हमने सब सुना और सुखी हमारा कार्य सिद्ध हुआ ।' विष्णुशर्मा बोले—'इतना आपका मनोरथ पूरा हुआ

अपरमपीदमस्तु—

मित्रं प्राप्नुत सज्जना जनपदैर्लक्ष्मीः समालम्ब्यतां
भूपालाः परिपालयन्तु वसुधां शश्वत्स्वधर्मे स्थिताः ।
आस्तां मानसतुष्टये सुकृतिनां नीतिर्नवोढेव वः
कल्याणं कुरुतां जनस्य भगवाश्चन्द्रार्धचूडामणिः' ॥२

इति हितोपदेशे मित्रलाभो नाम प्रथमः कथासंग्रहः समाप्तः

यह औरभी होय—सज्जन लोग मित्रको पावें, नगरनिवासी लक्ष्मीको राजा लोग सदा अपने धर्ममें रह कर पृथ्वीको रक्षण करें, आपकी नीति नवव स्त्रीके समान पण्डितोंके चित्तको प्रसन्न करें और भगवान् महादेवजी आ कल्याण करें ॥ २१६ ॥

प० रामेश्वरभट्टका किया हुआ हितोपदेश ग्रंथके मित्रलाभ नामक पहि अध्यायका भाषा अनुवाद समाप्त हुआ शुभम्

# हितोपदेशः।

## ॥ सुहृद्भेदः २ ॥

अथ राजपुत्रा ऊचुः—'आर्य! मित्रलाभः श्रुतस्तावदस्माभिः। [illegible]दानीं सुहृद्भेदं श्रोतुमिच्छामः।' विष्णुशर्मोवाच—'सुहृद्भेदं [illegible]वच्छृणुत,

फिर राजपुत्र बोले कि–'गुरुजी! मित्रलाभ तो हम सुन चुके, अब सुहृद्भेद [illegible] चाहते हैं।' विष्णुशर्मा बोले–'सुहृद्भेद सुनिये,

[illegible]स्यायमाद्यः श्लोकः—

> वर्धमानो महास्नेहो मृगेन्द्रवृषयोर्वने।
> पिशुनेनातिलुब्धेन जम्बुकेन विनाशितः' ॥ १ ॥

उसका पहिला वाक्य यह है—वनमें सिंह और बैलका बडा स्नेह बढ गया [illegible], उसे धूर्त और अति लोभी गीदडने छुडवा दिया' ॥ १ ॥

[illegible]जपुत्रैरुक्तम्—'कथमेतत्?' विष्णुशर्मा कथयति—

राजपुत्र बोले–'यह कथा कैसे है?' विष्णुशर्मा कहने लगे.

### ॥ कथा १ ॥

अस्ति दक्षिणापथे सुवर्णवती नाम नगरी। तत्र वर्धमानो नाम [illegible]णिग्निवसति। तस्य प्रचुरेऽपि वित्तेऽपरान्बन्धूनतिसमृद्धान्स[illegible]क्ष्य पुनरर्थवृद्धिः करणीयेति मतिर्बभूव।

[illegible] दक्षिण दिशामें सुवर्णवती नाम नगरी है, उसमें वर्धमान नाम एक बनिया [illegible]हता था। उसके पास बहुत-सा धनभी था, परन्तु अपने दूसरे भाईबन्धुओंको [illegible]धिक धनवान् देख कर उसकी यह लालसा हुई कि और अधिक धन इकट्ठा [illegible]रना चाहिये

[illegible]तः,—

> अधोऽधः पश्यतः कस्य महिमा नोपचीयते?।
> उपर्युपरि पश्यन्तः सर्व एव दरिद्रति ॥ २ ॥

क्योंकि—अपनेसे नीचे नीचे अर्थात् दरिद्रियोंको देख कर किसकी महिमा [illegible]हीं बढती है? अर्थात् सबको अभिमान बढ जाता है, और अपनेसे ऊपर ऊपर [illegible]र्थात् अधिक धनवानोंको देख कर सब लोग अपनेको दरिद्री समझते हैं ॥२॥

[illegible]परं च,—

> ब्रह्महापि नरः पूज्यो यस्यास्ति विपुलं धनम्।
> शशिनस्तुल्यवंशोऽपि निर्धनः परिभूयते ॥ ३ ॥

और दूसरे–जिसके पास बहुत-सा धन है उस ब्रह्मघातक मनुष्यकाभी [illegible]त्कार होता है और चन्द्रमाके समान अतिनिर्मल वंशमें उत्पन्न हुएभी निर्धन मनुष्यका अपमान किया जाता है ॥ ३ ॥

अन्यच्च,—

अव्यवसायिनमलसं दैवपरं साहसाच्च परिहीनम्।
प्रमदेव हि वृद्धपतिं नेच्छत्युपगूहितुं लक्ष्मीः ॥ ४ ॥

और जैसे नवजवान स्त्री बूढे पतिको नहीं चाहती है वैसेही लक्ष्मी निरुद्योगी, आलसी, 'प्रारब्धमें जो लिखा है सो होगा' ऐसा भरोसा चुपचाप बैठने वाले, तथा साहसहीन मनुष्यको नहीं चाहती है ॥ ४ ॥

अपि च,—

आलस्यं स्त्रीसेवा सरोगता जन्मभूमिवात्सल्यम्।
संतोषो भीरुत्वं षड् व्याघाता महत्त्वस्य ॥ ५ ॥

औरभी आलस्य, स्त्रीकी सेवा, रोगी रहना, जन्मभूमिका स्नेह, संतोष और डरपोकपन ये छ. बातें उन्नतिकी विघ्न करने वाली हैं ॥ ५ ॥

यतः,—

संपदा सुस्थितंमन्यो भवति स्वल्पयापि यः।
कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम् ॥ ६ ॥

क्योंकि–जो मनुष्य थोड़ीही संपत्तिसे अपनेको सुखी मानता है, विधि कृतकृत्य होकर उस मनुष्यकी उस संपत्तिको नहीं बढ़ाता है ॥ ६ ॥

अपरं च,—

निरुत्साहं निरानन्दं निर्वीर्यमरिनन्दनम्।
मा स्म सीमन्तिनी काचिज्जनयेत्पुत्रमीदृशम् ॥ ७ ॥

और निरुत्साही, आनन्दरहित, पराक्रमहीन तथा शत्रुको प्रसन्न करने वाले ऐसे पुत्रको कोई स्त्री न जने अर्थात् ऐसे पुत्रका जन्म न होनाही अच्छा है ॥ ७ ॥

तथा चोक्तम्,—

अलब्धं चैव लिप्सेत लब्धं रक्षेदवक्षयात्।
रक्षितं वर्धयेत्सम्यग्वृद्धं तीर्थेषु निक्षिपेत् ॥ ८ ॥

जैसा कहा है—नहीं पाये धनके पानेकी इच्छा करना, पाये हुए धनकी चोरी आदि नाशसे रक्षा करना, रक्षा किये हुए धनको व्यापार आदिसे बढ़ाना और अच्छी तरह बढ़ाए धनको सत्पात्रमें दान करना चाहिये ॥ ८ ॥

यतो लब्धमिच्छतोऽर्थयोगादर्थस्य प्राप्तिरेव। लब्धस्याप्यरक्षितस्य निधेरपि स्वयं विनाशः। अपि च। अवर्धमानश्चार्थः काले स्वल्पव्ययोऽप्यञ्जनवत्क्षयमेति। अनुपभुज्यमानश्च निष्प्रयोजन एव सः।

क्योंकि लाभकी इच्छा करने वालेको धन मिलताही है, एवं प्राप्त हुए पर रक्षा नहीं किये गये खजानेकाभी अपने आप नाश हो जाता है, औरभी यह है कि–बढ़ाया नहीं गया धन कुछ कालमें थोड़ा थोड़ा व्यय हो कर काजलके समान नाश हो जाता है और नहीं भोगा गया भी वह वृथा है।

था चोक्तम्,—

धनेन किं यो न ददाति नाश्नुते
बलेन किं यश्च रिपून्न बाधते।
श्रुतेन किं यो न च धर्ममाचरे-
त्किमात्मना यो न जितेन्द्रियो भवेत् ॥ ९ ॥

जैसा कहा है—धनसे क्या है? जो न देता है और न खाता है, बलसे ा है? जो वैरियोंको नहीं सताता है, शास्त्रसे क्या है? जो धर्मका आचरण ीं करता है, और आत्मासे क्या है? जो जितेंद्रिय नहीं है ॥ ९ ॥

तः,—

जलबिन्दुनिपातेन क्रमशः पूर्यते घटः।
स हेतुः सर्वविद्यानां धर्मस्य च धनस्य च ॥ १० ॥

क्योंकि—जैसे जलकी एक एक बूदके गिरनेसे धीरे २ घड़ा भर जाता है वही रण सब प्रकारकी विद्याओंका, धनका और धर्मकाभी है ॥ १० ॥

दानोपभोगरहिता दिवसा यस्य यान्ति वै।
स कर्मकारभस्त्रेव श्वसन्नपि न जीवति' ॥ ११ ॥

दान और भोगके बिना जिसके दिन जाते हैं वह लुहारकी धोंकनीके समान ास लेता हुआभी मरेके समान है ॥ ११ ॥

इति संचिन्त्य नन्दकसंजीवकनामानौ वृषभौ धुरि नियोज्य ाकटं नानाविधद्रव्यपूर्णं कृत्वा वाणिज्येन गतः कश्मीरं प्रति।

यह सोच कर नन्दक और संजीवक नाम दो बैलोंको जुएमें जोत कर और कडेको नाना प्रकारकी वस्तुओंसे लाद कर व्यापारके लिये काश्मीरकी ओर गया।

अन्यच्च,—

अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य च संचयम्।
अवन्ध्यं दिवसं कुर्याद्दानाध्ययनकर्मसु ॥ १२ ॥

और दूसरे—काजलके क्रम क्रमसे घटनेको और वल्मीक नाम चींटीके सच-यको देख कर, दान, पढ़ना और कामधंधोंमें दिनको सफल करना चाहिये ॥ १२ ॥

यत,—

कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम्।
को विदेशः सविद्यानां कः परः प्रियवादिनाम्? ॥ १३ ॥

क्योंकि—बलवानोंको अधिक बोझ क्या है? और उद्योग करने वालोंको क्या दूर है? और विद्यावानोंको विदेश क्या है? और मीठे बोलने वालोंका शत्रु कौन है? ॥ १३ ॥

अथ गच्छतस्तस्य सुदुर्गनाम्नि महारण्ये संजीवको भग्नजानुर्निपतितः।

फिर उस जाते हुएका, सुदुर्ग नाम गहरे वनमें, सजीवक घुटना टूटनेसे गिर गया।

तमालोक्य वर्धमानोऽचिन्तयत्—

'करोतु नाम नीतिज्ञो व्यवसायमितस्ततः।
फलं पुनस्तदेवास्य यद्विधेर्मनसि स्थितम् ॥ १४ ॥

उसे देख कर वर्धमान चिंता करने लगा—'नीति जानने वाला इधर उधर भले ही व्यापार करे परंतु उसको लाभ वही होता है कि जितना विधनाके जीमें है ॥ १४ ॥

किन्तु,—

विस्मयः सर्वथा हेयः प्रत्यूहः सर्वकर्मणाम्।
तस्माद्विस्मयमुत्सृज्य साध्ये सिद्धिर्विधीयताम्' ॥ १५ ॥

परन्तु सब कार्योंका रोकने वाला संदेह त्यागनेके योग्य है, इसीलिये संदेहको छोड़ कर, अपना कार्य सिद्ध करना चाहिये' ॥ १५ ॥

इति संचिन्त्य संजीवकं तत्र परित्यज्य वर्धमानः पुनः स्वयं धर्मपुरं नाम नगरं गत्वा महाकायमन्यं वृषभमेकं समानीय धुरि नियोज्य चलितः। ततः संजीवकोऽपि कथंकथमपि खुरत्रये भरं कृत्वोत्थितः।

यह विचार कर सजीवकको वहा छोड़ कर—फिर वर्धमान आप धर्मपुर नाम नगरमें जा कर एक दूसरे बड़े शरीर वाले बैलको ला कर जुएमें जोत कर चल दिया। फिर सजीवकभी बड़े कष्टसे तीन खुरोंके सहारे उठ खड़ा हुआ।

यतः,—

निमग्नस्य पयोराशौ पर्वतात्पतितस्य च।
तक्षकेणापि दष्टस्य आयुर्मर्माणि रक्षति ॥ १६ ॥

क्योंकि—समुद्रमें डूबे हुएकी, पर्वतसे गिरे हुएकी और तक्षक नाम सर्पके डसे हुएकी आयुही रक्षा करती है ॥ १६ ॥

नाकाले म्रियते जन्तुर्विद्धः शरशतैरपि।
कुशाग्रेणैव संस्पृष्टः प्राप्तकालो न जीवति ॥ १७ ॥

जो काल न होय तो सैकडों बाणोंके बिधनेसेभी प्राणी नहीं मरता है और जो काल आ जाय तो कुशाकी नोंकसे छूतेही मर जाता है ॥ १७ ॥

अरक्षितं तिष्ठति दैवरक्षितं
सुरक्षितं दैवहतं विनश्यति।
जीवत्यनाथोऽपि वने विसर्जितः
कृतप्रयत्नोऽपि गृहे न जीवति ॥ १८ ॥

दैवसे रक्षा किया हुआ, बिना रक्षाके भी ठहरता (बच जाता) है, और अच्छे

र रक्षा किया हुआ, दैवका मारा नहीं बचता है, जैसे वनमें छोड़ा हुआ
यहीनभी जीता रहता है, घर पर उपाय करनेसेभी नहीं जीता है ॥ १८ ॥

ततो दिनेषु गच्छत्सु संजीवकः स्वेच्छाहारविहारं कृत्वारण्यं
म्यन्हृष्टपुष्टाङ्गो बलवन्ननाद। तस्मिन्वने पिङ्गलकनामा सिंहः
भुजोपार्जितराज्यसुखमनुभवन्निवसति।

फिर कितनेही दिनोंके बाद संजीवक अपनी इच्छानुसार खा पी कर वनमें
रता फिरता हृष्ट पुष्ट हो कर ऊंचे स्वरसे डकराने लगा, उसी वनमें पिंगलक
। एक सिंह अपनी भुजाओंसे पाये हुए राज्यका सुख भोग रहा था.

था चोक्तम्—

नाभिषेको न संस्कारः सिंहस्य क्रियते मृगैः।
विक्रमार्जितराज्यस्य स्वयमेव मृगेन्द्रता ॥ १९ ॥

जैसा कहा है–मृगोंने सिंहका न तो राज्यतिलक किया और न संस्कार किया
तु सिंह अपने आपही पराक्रमसे राज्यको पा कर मृगोंका राजा होना दिखलाता
॥ १९ ॥

स चैकदा पिपासाकुलितः पानीयं पातुं यमुनाकच्छमगच्छत्।
न च तत्र सिंहेनाननुभूतपूर्वकमकालघनगर्जितमिव संजीवक-
र्दितमश्रावि। तच्छ्रुत्वा पानीयमपीत्वा स चकितः परिवृत्य
स्वस्थानमागत्य किमिदमित्यालोचयंस्तूष्णीं स्थितः। स च तथा-
वेधः करटकदमनकाभ्यामस्य मन्त्रिपुत्राभ्यां शृगालाभ्यां दृष्टः।
तं तथाविधं दृष्ट्वा दमनकः करटकमाह—'सखे करटक! किमित्य-
यमुदकार्थी स्वामी पानीयमपीत्वा सचकितो मन्दं मन्दमवतिष्ठते?'
करटको ब्रूते—'मित्र दमनक! अस्मन्मतेनास्य सेवैव न क्रियते।
यदि तथा भवति तर्हि किमनेन स्वामिचेष्टानिरूपणेनास्माकम्?
यतोऽनेन राज्ञा विनापराधेन चिरमवधीरिताभ्यामावाभ्यां
महद्दुःखमनुभूतम्।

और वह एक दिन प्याससे व्याकुल होकर पानी पीनेके लिये यमुनाके किनारे
पर गया। और वहां उस सिंहने नवीन कुऋतुकालके मेघकी गर्जनाके समान
संजीवकका डकराना सुना। यह सुन कर पानीके विना पिये वह घबराया सा
लौट कर अपने स्थान पर आ कर और यह क्या है यह सोचता हुआ चुपका
बैठ गया। और उसके मंत्रीके बेटे दमनक और करटक दो गीदड़ोंने उसे वैसा
बैठा देखा। उसको इस दशामें देख कर दमनकने करटकसे कहा–'भाई करटक!
यह क्या बात है कि, प्यासा स्वामी पानीको विना पिये डरसे धीरे धीरे आ
बैठा है?' करटक बोला–'भाई दमनक! हमारी समझसे तो इसकी सेवाही नहीं
की जाती है। जो ऐसे बैठा भी है तो हमें स्वामीकी चेष्टाका निर्णय करनेसे

क्या प्रयोजन है? क्योंकि इस राजासे विना अपराध बहुत काल तक तिरस्कार किये गये हम दोनोंने बड़ा दुःख सहा है ॥

सेवया धनमिच्छद्भिः सेवकैः पश्य यत्कृतम्।
स्वातन्त्र्यं यच्छरीरस्य मूढैस्तदपि हारितम् ॥ २० ॥

सेवासे धनको चाहने वाले सेवकोंने जो किया सो देख कि शरीरकी स्वतन्त्रताभी मूर्खोंने हार दी है ॥ २० ॥

अपरं च,—

शीतवातातपक्लेशान्सहन्ते यान्पराश्रिताः।
तदंशेनापि मेधावी तपस्तप्त्वा सुखी भवेत् ॥ २१ ॥

और दूसरे—जो पराये आसरतू हो कर जाड़ा, हवा और धूपमें दुःखोंको सहते हैं उस दुःखके छोटेसे छोटे भागसे तप ( स्वल्पही दुःख सहन ) करके बुद्धिमान् सुखी हो सकता है ॥ २१ ॥

अन्यच्च,—

एतावज्जन्मसाफल्यं यदनायत्तवृत्तिता।
ये पराधीनतां यातास्ते वै जीवन्ति के मृताः ॥ २२ ॥

और-स्वाधीनताका होनाही जन्मकी सफलता है, और जो पराधीन होने परभी जीते ( कहलाते ) हैं तो मरे कौनसे हैं? अर्थात् वेही मरेके समान हैं जो पराधीन हो कर रहते हैं ॥ २२ ॥

अपरं च,—

एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥ २३ ॥

और दूसरे-धनवान् पुरुष, आशारूपी ग्रहसे भरमाये गये हुए याचकोंके साथ, इधर आ, चला जा, बैठ जा, खड़ा हो, बोल, चुपका रह इस तरह खेल किया करते हैं ॥ २३ ॥

किं च,—

अबुधैरर्थलाभाय पण्यस्त्रीभिरिव स्वयम्।
आत्मा संस्कृत्य संस्कृत्य परोपकरणीकृतः ॥ २४ ॥

और जैसे वेश्या औरोंके लिये सिंगार करती है वैसेही मूर्खोंनेभी धनके लाभके लिये अपनी आत्माको गुणवान् करके पराये उपकारके लिये कर रक्खा है ॥ २४ ॥

किंच,—

या प्रकृत्यैव चपला निपतत्यशुचावपि।
स्वामिनो बहु मन्यन्ते दृष्टिं तामपि सेवकाः ॥ २५ ॥

और जो दृष्टि स्वभावहीसे चपल है और मल, मूत्र आदि नीची वस्तुओं परभी

गेरती है ऐसी स्वामीकी दृष्टिको सेवकलोग बहुत बडी करके मानते हैं ॥ २५ ॥

अपरं च,—

मौनान्मूर्खः प्रवचनपटुर्वातुलो जल्पको वा
क्षान्त्या भीरुर्यदि न सहते प्रायशो नाभिजातः ।
धृष्टः पार्श्वे वसति नियतं दूरतश्चाप्रगल्भः
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ २६ ॥

और चुपचाप रहनेसे मूर्ख, बहुत बातें करनेमें चतुर होनेसे उन्मत्त अथवा बातून, क्षमाशील होनेसे डरपोक, न सह सकनेसे नीतिरहित (अकुलीन) सर्वदा पास रहनेसे ढीठ, और दूर रहनेसे घमंडी कहलाता है इसलिये सेवारूप धर्म बड़ा कठिन है, जो (सब क्लेश सहन करनेवाले) योगियोंसेभी नहीं हो सकता है २६

विशेषतश्च,—

प्रणमत्युन्नतिहेतोर्जीवितहेतोर्विमुञ्चति प्राणान् ।
दुःखीयति सुखहेतोः को मूढः सेवकादन्यः ? ॥ २७ ॥

और विशेष बात यह है कि—जो उन्नतिके लिये झुकता है, जीनेके लिये प्राणोंको गलाता है, और सुखके लिये दुःखी होता है, ऐसा सेवकको छोड़ और कौन भला मूर्ख हो सकता है ?' ॥ २७ ॥

दमनको ब्रूते—'मित्र ! सर्वथा मनसापि नैतत्कर्तव्यम् ।

यतः,—

कथं नाम न सेव्यन्ते यत्नतः परमेश्वराः ।
अचिरेणैव ये तुष्टाः पूरयन्ति मनोरथान् ॥ २८ ॥

दमनक बोला—'मित्र ! कभी यह बात मनसेभी नहीं करनी चाहिये, क्योंकि स्वामियोंकी सेवा यत्नसे क्यों नहीं करनी चाहिये, जो सेवासे प्रसन्न हो कर शीघ्र (सेवकके) मनोरथ पूरे कर देते हैं ॥ २८ ॥

अन्यच्च पश्य,—

कुतः सेवाविहीनानां चामरोद्धूतसंपदः ।
उद्दण्डधवलच्छत्रं वाजिवारणवाहिनी' ॥ २९ ॥

और दूसरे देखो—स्वामीकी सेवा नहीं करने वालोंको चमरके दुलावसे युक्त ऐश्वर्य तथा ऊंचे दंड वाले श्वेत छत्र और घोडे हाथियोंकी सेना कहां धरी है ?' ॥ २९ ॥

करटको ब्रूते—'तथापि किमनेनास्माकं व्यापारेण? यतोऽव्यापारेषु व्यापारः सर्वथा परिहरणीयः ।

करटक बोला—'तोभी हमको इस कामसे क्या प्रयोजन है ? क्योंकि अयोग्य कामोंमें (पड़ना) व्यापार करना सर्वथा त्यागनेके योग्य है ॥

पश्य,—

अव्यापारेषु व्यापारं यो नरः कर्तुमिच्छति ।
स भूमौ निहतः शेते कीलोत्पाटीव वानरः' ॥ ३० ॥

देख—जो मनुष्य नहीं करनेके कामोंमें (पडना) व्यापार करना चाहता है व कीलके उखाड़ने वाले वदरकी तरह मर कर धरती पर सोता है ॥ ३० ॥

**दमनकः पृच्छति—'कथमेतत् ?' करटकः कथयति—**

दमनक पूछने लगा—'यह कथा कैसे है ?' तव करटक कहने लगा।—

## ॥ कथा २ ॥

**अस्ति मगधदेशे धर्मारण्यसंनिहितवसुधायां शुभदत्तनाम्ना कायस्थेन विहारः कर्तुमारब्धः। तत्र करपत्रदार्यमाणैकस्तम्भस्य कियद्दूरस्फाटितस्य काष्ठखण्डद्वयमध्ये कीलकः सूत्रधारेण निहितः। तत्र वलवान्वानरयूथः क्रीडन्नागतः। एको वानरः कालप्रेरित इव तं कीलकं हस्ताभ्यां धृत्वोपविष्टः। तत्र तस्य मुष्कद्वयं लम्बमानं काष्ठखण्डद्वयाभ्यन्तरे प्रविष्टम्। अनन्तरं स च सहजचपलतया महता प्रयत्नेन तं कीलकमाकृष्टवान्। आकृष्टे च कीलके चूर्णिताण्डद्वयः पञ्चत्वं गतः। अतोऽहं ब्रवीमि—"अव्यापारेषु व्यापारम्" इत्यादि' ॥ दमनको ब्रूते—'तथापि स्वामिचेष्टानिरूपणं सेवकेनावश्यं करणीयम्।'—करटको ब्रूते—'सर्वस्मिन्नधिकारे य एव नियुक्तः प्रधानमन्त्री स करोतु। यतोऽनुजीविना पराधिकारचर्चा सर्वथा न कर्तव्या।**

मगध देशमे धर्मारण्यके पास किसी भूमिमे शुभदत्त नामक कायस्थने एक मन्दिर वनवाना आरंभ किया था। वहां आरेसे चीरा हुआ लट्ठा जो कितनीही दूर तक फट रहा था, उस काटके दोनों भागोंके वीचमें वढईने कील ठोंक दी थी। वहा वलवान् वन्दरोंका झुंड खेलता हुआ आया। एक वन्दर मृत्युसे प्रेरित हुएके समान उस लकडीकी खूटीको दोनों हाथोंसे पकड़ कर वैठ गया। वहा उसके लटकते हुए दोनों अंडकोश, उस काटके दोनों भागोंके वीचमें लटक पड़े और फिर उसने स्वभावकी चचलतासे वडे वडे उपाय द्वारा खूटीको खींच लिया, और खूटीको खीचतेही उसके दोनों अंडकोश पिच गये और वह मर गया ॥ इसलिये मैं कहता हूं—"विना कामके कामोंमें पड़ना" इत्यादि' ॥ दमनकने कहा—'तोभी सेवकको स्वामीके कामका विचार अवश्य करना चाहिये॥' करटक वोला—'जो सव काम पर अधिकारी प्रधान मंत्री होय वही करे। क्योंकि सेवकको पराये कामकी चर्चा कभी नहीं करनी चाहिये ॥

पश्य,—

> **पराधिकारचर्चां यः कुर्यात्स्वामिहितेच्छया।**
> **स विषीदति चीत्काराद्गर्दभस्ताडितो यथा॥ ३१ ॥**

देख,—जो स्वामीके हितकी इच्छासे पराये अधिकारकी चर्चा करता है वह रेंकनेसे मारे गये गधेकी तरह मारा जाता है ॥ ३१ ॥

**दमनकः पृच्छति—'कथमेतत् ?' करटको ब्रूते—**

दमनक पूछने लगा—'यह कथा कैसे है ?' करटक कहने लगा।—

## ॥ कथा २ ॥

अस्ति वाराणस्यां कर्पूरपटको नाम रजकः । स चाभिनववयस्कया वध्वा सह चिरं निधुवनं कृत्वा निर्भरमालिङ्ग्य प्रसुप्तः । तदनन्तरं तद्गृहद्रव्याणि हर्तुं चौरः प्रविष्टः । तस्य प्राङ्गणे गर्दभो बद्धस्तिष्ठति, कुक्कुरश्चोपविष्टोऽस्ति । अथ गर्दभः श्वानमाह—'सखे! भवतस्तावदयं व्यापारः। तत्किमिति त्वमुच्चैः शब्दं कृत्वा स्वामिनं न जागरयसि?' कुक्कुरो ब्रूते—'भद्र! मम नियोगस्य चर्चा त्वया न कर्तव्या। त्वमेव किं न जानासि यथा तस्याहर्निशं गृहरक्षां करोमि । यतोऽयं चिरान्निर्वृतो ममोपयोगं न जानाति । तेनाधुनापि ममाहारदाने मन्दादरः । यतो विना विधुरदर्शनं स्वामिन उपजीविषु मन्दादरा भवन्ति ।'

बनारसमें एक कर्पूरपट नामक धोबी रहता था । वह नवजवान अपनी स्त्रीके साथ बहुत काल तक विलास करके, और अत्यन्त छातीसे चिपटा कर सो गया । इसके बाद उसके घरके द्रव्यको चुरानेके लिये चोर अंदर घुसा । उसके आगनमें एक गधा बंधा था और एक कुत्ता भी बैठा था । इतनेमें गधेने उससे कहा—'मित्र! यह तेरा फर्ज है, इसलिये क्यों नहीं ऊंचे शब्दसे भौंक कर स्वामीको जगाता है?' कुत्ता बोला—'भाई! मेरे कामकी चर्चा तुझे नहीं करनी चाहिये, और क्या तू सचमुच नहीं जानता है कि जैसी मैं उनके घरकी रखवाली रातदिन करता हूं, कि जिस कारण यह बहुत कालसे निश्चित होकर मेरे उपयोगको नहीं मानता है? इसलिये आजकल वह मेरे आहार देनेमें भी आदर (फिक्र) कम करता है। क्योंकि विना आपत्तिके देखें स्वामी सेवकों पर थोड़ा आदर करते हैं।

गर्दभो ब्रूते—'शृणु रे बर्बर!

याचते कार्यकाले यः स किंभृत्यः स किंसुहृत् ।'

गधा बोला—'सुन रे मूर्ख! जो कामके समय पर मांगे वह निन्दित सेवक और निन्दित मित्र है।'

कुक्कुरो ब्रूते—

'भृत्यान्संभाषयेद्यस्तु कार्यकाले स किंप्रभुः ॥ ३२ ॥

कुत्ता बोला—'जो काम अटकने पर सेवकोंसे (केवल अपने स्वार्थके खातर) मीठी मीठी बातें करे वह तो निन्दित स्वामी है' ॥ ३२ ॥

यतः,—

आश्रितानां भृतौ स्वामिसेवायां धर्मसेवने ।
पुत्रस्योत्पादने चैव न सन्ति प्रतिहस्तकाः' ॥ ३३ ॥

क्योंकि आश्रितोंके पालन-पोषणमें, स्वामीकी सेवामें, धर्मकी सेवा (आचरण) करनेमें, और पुत्रके उत्पन्न करनेमें, प्रतिनिधि (एवजी) नहीं होते हैं, अर्थात् ये काम अपने आपही करनेके हैं, दूसरेसे करानेके योग्य नहीं हैं' ॥ ३३ ॥

ततो गर्दभः सकोपमाह—'अरे दुष्टमते! पापीयांस्त्वं यद्विपत्तौ

**स्वामिकार्य उपेक्षां करोपि । भवतु तावत्, यथा स्वामी जाग रिष्यति तन्मया कर्तव्यम् ।**

फिर गधा झुझला कर वोला–'अरे दुष्टवुद्धि ! तू बड़ा पापी है, कि विपत्ति स्वामीके काममें अनादर करता है । जो हो सो हो, जैसे स्वामी जागेगा सो अवश्य करूगा ॥

**यतः,—**

**पृष्ठतः सेवयेदर्कं जठरेण हुताशनम् ।**
**स्वामिनं सर्वभावेन परलोकममायया' ॥ ३४ ॥**

क्योंकि—पीठके वल धूप खाय, पेटके वल अग्निसे तापे, स्वामीकी स प्रकारसे (वफादारीसे) और परलोककी विना कपटसे सेवा करनी चाहिये ॥३४॥

**इत्युक्त्वातीव चीत्कारशब्दं कृतवान् । ततः स रजकस्तेन चीत्कारेण प्रबुद्धो निद्राभङ्गकोपादुत्थाय गर्दभं लगुडेन ताडयामास । तेनासौ पञ्चत्वमगमत् । अतोऽहं ब्रवीमि—"पराधिकारचर्चाम्" इत्यादि ॥ पश्य । पशूनामन्वेषणमेवास्मन्नियोगः स्वनियोगचर्चा क्रियताम् । ( विमृश्य ) कित्वद्य तया चर्चया न प्रयोजनम् । यत आवयोर्भक्षितशेषाहारः प्रचुरोऽस्ति । दमनकः सकोपमाह—'कथमाहारार्थी भवान्केवलं राजानं सेवते? एतदयुक्तमुक्तं त्वया ।**

यह कह कर उसने अत्यंत रेंकनेका शब्द किया । तव वह धोबी उस चिल्लाने जाग उठा और नींद टूटनेके क्रोधके मारे उठ कर लकड़ीसे गधेको मारा जिससे वह मर गया । इसलिये मैं कहता हूं–"पराये अधिकारकी चर्चा" इत्यादि ॥ देख–पशुओंका ढूंडना हमारा काम है ॥ अपने कामकी चर्चा करो ( विचार कर ) परन्तु आज उस चर्चासे कुछ प्रयोजन नहीं ॥ क्योंकि हम दोनोंके भोजनसे बचा हुआ आहार वहुत धरा है ।' दमनक क्रोधसे बोला 'क्या तुम केवल भोजनकेही अर्थी हो कर राजाकी सेवा करते हो ? यह तुमने अयोग्य कहा ।

**यतः,—**

**सुहृदामुपकारकारणा-**
**द्द्विषतामप्यपकारकारणात् ।**
**नृपसंश्रय इष्यते बुधै-**
**र्जठरं को न बिभर्ति केवलम् ॥ ३५ ॥**

क्योंकि–मित्रोंके उपकारके लिये, और शत्रुओंके अपकारके लिये चतुर मनुष्य राजाका आश्रय करते हैं (याने अपने मित्र या आप्तका हितके लिये और शत्रुके नाशके लियेही राजाश्रय किया जाता है ) और केवल पेट कौन नहीं भर सकता है ? अर्थात् सभी भरते हैं ॥ ३५ ॥

**जीविते यस्य जीवन्ति विप्रा मित्राणि बान्धवाः ।**
**सफलं जीवितं तस्य आत्मार्थे को न जीवति? ॥ ३६ ॥**

